श्रीः ।

# तर्कसंग्रहः ।

# THE TARKA-SANGRAHA

OF

## PANDIT ANNAM BHATTA

With the two Commentaries Naya-bodhini and Padakritya of Govardhan Pandit and Chandrasingha Pandit.

REVISED BY

PANDIT SHIVADATTA OF JAIPUR

Printed And Published

BY

KHEMRAJ SHRIKRISHNA DASS

IN HIS VENKATESHWAR PRESS

BOMBAY.

1897.

श्रीः ।

# तर्कसंग्रहः ।

पण्डितवरश्रीमदन्नंभट्टविरचितः ।

गोवर्धनपण्डितकृता न्यायबोधिनी, चन्द्रसिंहपण्डितकृतं पदकृत्यम्, इति व्याख्याद्वयेन संयुतः ।

जयपुरस्थपण्डितबदरीनाथात्मजदाधीचशिवदत्तेनसंशोधितः ।


सच

खेमराज श्रीकृष्णदास इत्यनेन

मुम्बय्यां

स्वकीये "श्रीवेङ्कटेश्वर" मुद्रणालये

मुद्रयित्वा प्रकाशितः ।

शके १८१९, संवत् १९५४.

श्रीः ।

# सटीकतर्कसङ्ग्रहलक्ष्यपदानामनुक्रमणिकेयम् ।

इत्यनुक्रमणिका समाप्ता ।

श्रीः ।

# तर्कसंग्रहः ।

निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।
बालानांसुखबोधाय क्रियते तर्कसंग्रहः ॥ १ ॥

( न्यायबोधिनी )

नि[1]खिलागमसंचारि श्रीकृष्णाख्यं परं महः ।
ध्यात्वा गोवर्द्धनसुधीस्तनुते न्यायबोधिनीम् ॥१॥

चिकीर्षितस्यग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थमिष्टदेवता-नमस्कारात्मकं मंगलं शिष्याशिक्षार्थं ग्रन्थतो निबध्नाति निधायेति ॥

( पदकृत्यम् )

श्रीगणेशं नमस्कृत्य पार्वतीशंकरं परम् ।
मया चन्द्रजसिंहेन क्रियते पदकृत्यकम् ॥ १ ॥

विश्वेशं जगत्कर्तारं श्रीसाम्बमूर्तिं हृदि मनसि निधाय नितरां धारयित्वा गुरुवन्दनं च विधाय कृ[2]त्वा—इत्यर्थः ॥ बालेति ॥ अत्रा-धीतव्याकरणकाव्यको[3][4]शोऽनधीतन्यायशास्त्रो बालः । व्यासादावति-व्याप्तिवारणाय—'अनधीतन्याय—' इति ॥ स्तनंधयेऽतिप्रसक्तिवा[5]-रणाय—'अधीतव्याकरण—' इति ॥

"यस्मादिदमहं मन्ये बालानामुपकारकम् ।
तस्माद्धितकरं वाक्यं प्रवक्तव्यं सतां[6] सदा" ॥

पाठान्तराणि १ अखिला । २ ये । ३ कुत्रचिन्नास्ति । ४ कोशानधीत । ५ निवारणाय । ६ सद्भिः ।

सुखेति॥ सुखेनानायासेन बोधाय 'पदार्थतत्त्वज्ञानाय' इत्यर्थः ॥ तर्क्यन्ते प्रमितिविषयीक्रियन्ते ' इति तर्का द्रव्यादिसप्तपदार्थाः तेषां संग्रहः संक्षेपेणोद्देशलक्षणपरीक्षा यस्मिन् स ग्रन्थः ॥ नाममात्रेण वस्तुसंकीर्तनम् उद्देशः । यथा-' द्रव्यगुण--' इति ॥ असाधारणधर्मो लक्षणम् । यथा-गन्धवत्त्वं पृथिव्याः । ' लक्षितस्य लक्षणं संभवति न वा ' इति विचारः परीक्षा ॥ ' अत्रोद्देशस्य पक्षज्ञानं फलं ' लक्षणस्य इतरभेदज्ञानं ' परीक्षाया लक्षणदोषपरिहारः-' इति मन्तव्यम् ॥

## द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्तपदार्थाः

( न्याय० ) अथ पदार्थान् विभजते--' द्रव्य--' इति ॥ अत्र सप्तग्रहणं[१] ' पदार्थत्वंद्रव्याद्यन्यतमत्वव्याप्यम् ' इति व्याप्तिलाभाय ॥ ननु " शक्तिपदार्थस्याष्टमस्य विद्यमानत्वात्[२] कथं ' सप्तैव ' इति-तथाहि-वह्निसंयुक्तेन्धनादौ सति मणिसंयोगे[३] दाहो न जायते, तच्छून्ये[४] जायते ॥ अतो ' मणिसमवधाने[५] शक्तिर्नश्यति, मण्यभावदशायां दाहानुकूलाशक्तिरुत्पद्यते ' इति कल्प्यते ॥ तस्माच्छक्तिरतिरिक्तः पदार्थः " इति चेत् ॥ न ॥ मणेः[६] प्रतिबन्धकत्वेन तदभावस्य कारणत्वेनैव निर्वाहे मणिसमवधानासमवधानाभ्यामनन्तशक्तिध्वंसकल्पनाया अन्याय्यत्वात् ॥ तस्मात् ' सप्तैव पदार्था ' इति[७] ॥

---

१ सप्तपदं नास्ति । २ सत्त्वात् । ३ मण्यादिसंयुक्तेन्धनादौ सत्यपि वह्निसंयोगे । ४ शून्ये तु । ५ धानेदाहानुकूलाश । ६ दाहं प्रति मणेः प्र- । ७ इति सिद्धम् ।

## तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकाल-दिगात्ममनांसि नवैव ।

( न्याय० ) द्रव्याणिं विभजते—' पृथिवी—' इति ॥ ननु " अन्धकारस्य दशमद्रव्यस्य सत्वात् कथं ' नवैव' इति ॥ तथा हि—' नीलंतमश्चलति ' इति प्रतीतेर्नीलरूपाश्रयत्वेन क्रियाश्रयत्वेन च द्रव्यत्वं सिद्धम् । न च ' नवद्रव्येष्वन्तर्भावात्कुतो दशमद्रव्यत्वम् ' इति वाच्यम् ॥ आकाशादिपञ्चकस्य नीरूपत्वात्तमसो नीलरूपवत्त्वाद्वा[2]योरपि नीरूपत्वान्न तेष्वन्तर्भावः, तमसो निर्गन्धत्वा[3]न्न पृथिव्यामन्तर्भावः संभवति, जलतेजसोः शीतोष्णस्पर्शवत्वान्न तयोरन्तर्भावः ॥ तस्मात्तमसो दशमद्रव्यत्वं सिद्धम् " इति चे न्न ॥ तेजसोऽभावेनैवोपपत्तावतिरिक्तकल्पनायां मानाभावात् ॥ नच " विनिगमनाविरहात्तेज एवान्धकाराभावस्वरूपम् " इति वाच्यम् ॥ तेजसोऽभावस्वरूपत्वे सर्वानुभूतोष्णस्पर्शाश्रयत्व[4]स्यबाधात्॥ द्रव्यान्तरकल्पनेगौरवाच्च ॥ तस्मादुष्णस्पर्शगुणाश्रयतया तेजसो द्रव्यत्वं सिद्धम् । तमसि नील[5]रूपप्रतीतिस्तु भ्रान्तिरेव दीपापसरणक्रियाया एव तत्र भानात् ॥

( पदकृत्य० ) तत्रेति ॥ तत्र ' सप्तपदार्थमध्ये ' इत्यर्थः ॥ द्रव्याणि नवैव इत्यन्वयः ॥ एवं ' तत्र ' इति पदं ' चतुर्विंशतिगुणाः ' इत्यादिष्वप्यन्वेति ॥ द्रव्यत्त्वजातिमत्वं गुणवत्त्वं समवायिकारणत्वं वा द्रव्यसामान्यस्यलक्षणम् ॥

---

१ विद्यमानत्वात् । २ वायोश्चापि । ३ त्वात्पृथिव्या गन्धवत्त्वान्न । ४ आश्रयीभूतद्रव्यान्तर। ५ नीलत्वादिम ।

रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगाविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराश्चतुर्विंशतिगुणाः ॥ उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्च कर्माणि ॥ परमपरं चेति द्विविधं सामान्यम् ॥

( पद० ) परमपरं चेति ॥ परसामान्यम्, अपरसामान्यम् इत्यर्थः॥ परत्वं चाधिकदेशवृत्तित्वम् ॥ अपरत्वं च न्यूनदेशवृत्तित्वम् ॥

नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव ॥ समवायस्त्वेक एव ॥ अभावश्चतुर्विधः—प्रागभावःप्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति ॥

तत्र गन्धवती पृथिवी।सा द्विविधा—नित्यानित्या च। नित्या परमाणुरूपा। अनित्या कार्यरूपा। पुनस्त्रिविधा—शरीरेन्द्रियविषयभेदात् । शरीरमस्मदादीनाम्। इन्द्रियं गन्धग्राहकं घ्राणम् । तच्च नासाग्रवर्ति । विषयोमृत्पाषाणादिः ॥

( न्यायबो० ) गन्धवतीति[1] ॥ गन्धवत्त्वं पृथिव्या लक्षणम् ॥ लक्ष्या पृथिवी ॥ पृथिवीत्वं लक्ष्यतावच्छेदकम् । यद्धर्मावच्छिन्नं लक्ष्यं, स धर्मो लक्ष्यतावच्छेदकः ॥ यो धर्मो यस्या[2] अवच्छेदकः सा[3] तद्धर्मावच्छिन्ना[4] ॥ तथा च लक्ष्यतावच्छेदकं पृथिवीत्वं चेल्लक्ष्यता पृथिवीत्वावच्छि-

१ गन्धवत्त्वं गन्धसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम् । २ यस्य। ३ स । ४ न्नः ।

न्ना ॥ एवं शीतस्पर्शवत्त्वादिलक्षणेषु[1] जलत्वादीनां लक्ष्यतावच्छेदकत्वं बोध्यम् ॥

(पद०) तदेव हि लक्षणम्, यदव्याप्त्यतिव्याप्त्यसंभवरूपदोषत्रयशून्यम् ॥ यथा गोः सास्नादिमत्त्वम् ॥ अव्याप्तिश्च लक्ष्यैकदेशावृत्तित्वम् ॥ अत एव गोर्न कपिलत्वं लक्षणम्, तस्याव्याप्तिग्रस्तत्वात् ॥ अतिव्याप्तिश्च लक्ष्यवृत्तित्वे सत्यलक्ष्यवृत्तित्वम् ॥ अत[2] एव गोर्न शृङ्गित्वं लक्षणम्, तस्यातिव्याप्तिग्रस्तत्वात् ॥ असंभवश्च लक्ष्यमात्रावृत्तित्वम् ॥ अत[3] एव गोरेकशफवत्त्वं न लक्षणम्, तस्यासंभवग्रस्तत्वात् ॥ नित्येति ॥ ध्वंसभिन्नत्वे सति ध्वंसाप्रतियोगित्वं नित्यत्वम् ॥ ध्वंसेऽतिव्याप्तिवारणाय 'ध्वंसभिन्ने[4]–' इत्यादि ॥ घटादावतिव्याप्तिवारणाय विशेष्यदलम् ॥ ध्वंसाप्रतियोगित्वं प्रागभावप्रतियोगित्वं वा नित्यत्वम् ॥ यद्भोगायतनं तदेव शरीरम्, चेष्टाश्रयो वा ॥ इन्द्रियमिति चक्षुरादावतिव्याप्तिवारणाय 'गन्धग्राहकम्' इति ॥ कालादावतिप्रसक्तिवारणाय 'इन्द्रियम्' इति ॥ विषय इति ॥ शरीरेन्द्रियभिन्नत्वे सत्युपभोगसाधनं विषयः ॥ शरीरादावतिव्याप्तिनिरासाय भिन्नान्तम्[5] ॥ परमाण्वादावतिप्रसक्तिवारणाय विशेष्यदलम् ॥ कालादिवारणाय 'जन्यत्वे सति' इत्येतदपि बोध्यम् ॥

**शीतस्पर्शवत्य आपः। ता द्विविधाः–। नित्या अनित्याश्च। नित्याः परमाणुरूपाः अनित्याः कार्यरूपाः। पुनस्त्रिविधाः–शरीरेन्द्रियविषयभेदात्। शरीरं वरुणलोके। इन्द्रियं रसग्राहकं रसनम्। तच्च जिह्वाग्रवर्ति। विषयः सरित्समुद्रादिः ॥**

---

१ णेषु जलादीनां लक्ष्यता जलत्वादीनां लक्ष्यतावच्छेदकत्वं च। २ तत। ३ यथा। ४ ध्वंसभिन्नेति विशेषणम्। ५ सत्यन्तम्।

( पद० ) शीतेति ॥ तेजआदावतिव्याप्तिवारणाय 'शीत' इति ॥ आकाशावारणाय 'स्पर्श' इति ॥ कालादावतिप्रसक्तिवारणाय 'समवायसंबन्धेन' इति पदं देयम् ॥ इन्द्रियमिति ॥ त्वगादावतिव्याप्तिवारणाय 'रसग्राहकम्' इति ॥ रसनेन्द्रियरससंनिकर्षादावतिव्याप्तिनिरासाय 'इन्द्रियम्' इति ॥ सरिदिति ॥ आदिनातडागहिमकरकादीनां संग्रहः ॥

**उष्णस्पर्शवत्तेजः । तद्द्विविधम्—नित्यमनित्यं च। नित्यंपरमाणुरूपम् । अनित्यं कार्यरूपम् । पुनस्त्रिविधम्—शरीरेन्द्रियविषयभेदात् । शरीरमादित्यलोके । इन्द्रियं रूपग्राहकं चक्षुःकृष्णताराग्रवर्ति । विषयश्च चतुर्विधः—भौमदिव्योदर्याकरजभेदात् । भौमं वह्न्यादिकम् । अविन्धनंदिव्यं विद्युदादि । भुक्तस्य परिणामहेतुरुदर्यम् । आकरजं सुवर्णादि॥**

( पदकृ० ) उष्णेति ॥ जलादावतिव्याप्तिवारणाय 'उष्ण' इति॥ कालादावतिव्याप्तिवारणाय 'समवायसंबन्धेन' इति पदं देयम्॥ इन्द्रियमिति ॥ घ्राणादावतिव्याप्तिवारणाय 'रूपग्राहकम्' इति ॥ कालादावतिव्याप्तिनिरासाय[1] 'इन्द्रियम्' इति ॥ 'भेदात्' इतिपदं प्रत्येकमभिसंबध्यते ॥ भौमामिति ॥ आदिपदेन खद्योतगततेजःप्रभृतिप[2]रिग्रहः ॥ विद्युदिति ॥ आदिना रविचन्द्रादिपरिग्रहः ॥ भुक्तेति ॥ भुक्तस्यान्नादेः परिणामो जीर्णता तस्य हेतुरुदर्यम्,इत्यर्थः॥सुवर्णेति॥ आदिना रजतादेः परिग्रहः ॥

**रूपरहितस्पर्शवान् वायुः । स द्विविधः—नित्योऽनि**

---

१ निरासाय । २ तेः ।

त्यश्च । नित्यः परमाणुरूपः । अनित्यः कार्यरूपः । पुनस्त्रिविधः—शरीरेन्द्रियविषयभेदात् । शरीरंवायुलोके । इन्द्रियं स्पर्शग्राहकं त्वक् सर्वशरीरवृत्ति । विषयो वृक्षादिकम्पनहेतुः ॥ शरीरान्तस्संचारीवायुः प्राणः।स चैकोऽप्युपाधिभेदात्प्राणापानादिसंज्ञांलभते।

( न्यायबो० ) एवं पृथिव्यादित्रिकं[1] निरूप्य वायुं निरूपयति—रूपरहितेति ॥ रूपरहितत्वे सति स्पर्शवत्त्वं वायोर्लक्षणम् ॥ सतिसप्तम्याविशिष्टार्थतया[2] रूपरहितत्वविशिष्टस्पर्शवत्त्वं वायोर्लक्षणम् ॥ विशेषणानुपादाने स्पर्शवत्त्वमात्रस्य लक्षणत्वे पृथिव्यादित्रिकेऽतिव्याप्तिः, तद्वारणाय विशेषणोपादानम् ॥ तावन्मात्रे कृते आकाशादावतिव्याप्तिः, तत्रापि रूपरहितत्वस्य सत्त्वात् । अतउक्तं 'स्पर्श—' इति ॥ अतिव्याप्तिर्नाम अलक्ष्ये लक्षणसत्त्वम् । यथा गोः शृङ्गित्वं लक्षणं कृतं चेत् लक्ष्यभूतगोभिन्नमहिष्यादावतिव्याप्तिः, तत्रापि शृङ्गित्वस्य विद्यमानत्वात् ॥ अव्याप्तिर्नाम लक्ष्यैकदेशावृत्तित्वम् ॥ यथा गोर्नीलरूपवत्त्वं[3] लक्षणं कृतं चेत् ( लक्ष्यैकदेशावृत्तित्वं नाम 'लक्ष्यतावच्छेदकाश्रयभूते क्वचिल्लक्ष्ये लक्षणस्याभावोऽसत्त्वमेवाव्याप्तिः' इत्यर्थः )[4] श्वेतगवि नीलरूपवत्त्वस्याभावात् ( अव्याप्तिः ) असंभवो नाम लक्ष्यमात्रे कुत्रापि लक्षणासत्वम् ॥ यथा—गोरे-

---

१ दिकं । २ ष्टार्थकतया । ३ इतःप्रभृति पाठान्तरम् 'गोर्नीलरूपवत्त्वं लक्षणं कृतं चेल्लक्ष्यैकदेशे लक्ष्यतावच्छेदकाश्रयीभूतक्वचिल्लक्ष्ये लक्षणासत्त्वमव्याप्तिरित्यर्थः। ४ इयंपङ्क्तिष्टिप्पणीभूता केनचिट्टीकामध्ये प्रक्षिप्तेति भाति ।

कशफवत्त्वम् । गोसामान्ये द्विशफवत्त्वेन एकशफवत्त्वाभात्[1] ॥ अतिव्याप्त्यव्याप्त्यसंभवानां ( प्रत्येक ) निष्कृष्टलक्षणं च[2] लक्ष्यतावच्छेदकसामानाधिकरण्ये सति लक्षतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यम्' अतिव्याप्तिः ॥ अव्याप्तिस्तु 'लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वम्' ॥ असंभवस्तु 'लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वम्' ( इति ) ॥

( पदकृ० ) रूपेति ॥ घटादिवारणाय विशेषणम् । आकाशादिवारणाय विशेष्यम् ॥ इन्द्रियमिति॥ चक्षुरादिवारणाय 'स्पर्शग्राहकम्' इति ॥ कालादिवारणाय 'इन्द्रियम्' इति ॥ वृक्षेति । आदिपदेन जलादीनां परिग्रहः ॥ शरीरेति ॥ महावायुवारणाय । विशेषणम् । मन आदिवारणाय विशेष्यम् । धनंजयवारणाय संचारी इति॥उपाधीति॥ 'मुखनासिकाभ्यां निर्गमनप्रवेशनात्, प्राणः ॥ जलादेरधोनयनात् अपानः ॥ भुक्तपरिणामाय जाठरानलस्य समुन्नयनात् समानः' ॥ अन्नादेरूर्ध्वनयनात् उदानः ॥ नाडीमुखेषु विततनात् व्यानः इति क्रिया रूपोपाधिभेदात्तथा व्यवह्रियते इत्यर्थः ॥

**शब्दगुणकमाकाशम् । तच्चैकं विभु नित्यं च ॥**

( न्यायबो० ) आकाशं लक्षयति—'शब्दगुणकम्' इति ॥ अत्र गुणपदम् 'आकाशे शब्द एव विशेषगुणः' इति द्योतनाय न त्वतिव्याप्तिवारणाय, समवायेन शब्दवत्त्वमात्रस्य लक्षणत्वात् ॥ तदुक्तम्—

"रूपं गन्धो रसः स्पर्शः स्नेहः सांसिद्धिको द्रवः ।
बुद्ध्यादि भावनान्ताश्च शब्दो वैशेषिका गुणाः"

१ वत्त्वस्य कुत्राप्यसत्त्वात् । २ तु । ३ समानाधिकरणत्वे । ४ संचारीति । ५ सम्यक्त्वात् ।

इति ॥ नन्वेकमिति ॥ अनेकत्वे मानाभावादिति । वि-भ्विति ॥ सर्वमूर्तसंयोगित्वं विभुत्वम् ॥ मूर्तत्वं च क्रिया-श्रयत्वम् ॥ पृथ्व्यप्तेजोवायुमनांसि मूर्तानि । पृथ्व्यप्ते-जोवाय्वाकाशपञ्चकं भूतपदवाच्यम् । भूतत्वं नाम बहि-रिन्द्रियग्राह्यविशेषगुणवत्त्वम् ॥

( पदकृ० ) शब्देति ॥ शब्दो गुणोयस्य तत्तथा॥ असंभववारणाय शब्दपदमुन्नेयम् ॥ विभ्विति ॥ सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वम् ॥

## अतीतादिव्यवहारहेतुः कालः। स चैको विभुर्नित्यश्च॥

(न्यायबो०) कालं लक्षयति–अतीतेति ॥ व्यवहारहे-तुत्वस्य लक्षणत्वे 'घटः' इति व्यवहारहेतुभूतघटादाव-तिव्याप्तिःतद्वारणाय'अतीतादि'इति विशेषणोपादानम्

( पदकृ० ) अतीतेति ॥ अतीत आदिर्यो व्यवहारः 'अतीतः भविष्यन्वर्तमान' इत्यात्मकः, तस्यासाधारणहेतुः काल इत्यर्थः ॥ 'नन्विदं लक्षणम् आकाशेऽतिव्याप्तं व्यवहारस्य शब्दात्मकत्वात' इति चेत्।।न॥अत्र हेतुपदेन निमित्तहेतोर्विवक्षितत्वात्।।नचैवमपि कण्ठ ताल्वाद्यभिघातेऽतिव्याप्तिरिति वाच्यम् ॥ विभुत्वस्यापि निवेशात् ॥

## प्राच्यादिव्यवहारहेतुर्दिक् । सा चैका नित्या विभ्वी च॥

( न्यायबो० ) दिशो लक्षणमाह–प्राचीति उदयाच-लसंयुक्ता दिक् प्राची ॥ अस्ताचलसंयुक्ता दिक् प्रतीची॥ मेरोः संनिहिता दिग् उदीची ॥ मेरोर्व्यवहिता दि-ग्दक्षिणा ॥

( पदकृ० ) प्राच्येति ॥ 'इयं प्राची' इयं 'प्रतीची' 'इयमुदीची' इत्यादिव्यवहारासाधारणं कारणं दिगित्यर्थः ॥ 'हेतुर्दिक् इत्यु-

१ पृथिव्य । २ शब्दगुणोभयम् । ३ व्याप्तिस्तद ।

च्यमाने परमाण्वादावतिव्याप्तिः स्यात् ' तद्वारणाय, व्यवहारहेतुः इति ।। आकाशादिवारणाय 'असाधारणम्' इत्यपि बोध्यम् ॥

**ज्ञानाधिकरणमात्मा । स द्विविधः—परमात्मा जीवात्माचेति ॥तत्रेश्वरः सर्वज्ञः परमात्मा एकएव । जीवस्तुप्रतिशरीरं भिन्नो विभुर्नित्यश्च ॥**

( न्यायबो० ) आत्मानं निरूपयति—ज्ञानाधिकरणमिति ॥ अत्राधिकरणपदं समवायेन ज्ञानलाभार्थम् ॥

( पदकृ० ) ज्ञानाधिकरणेति ॥ भूतलादिवारणाय 'ज्ञान' इति ॥ कालादिवारणाय ' समवायेन ' इत्यपि देयम् ॥ ईश्वर इति ॥ समवायसंबन्धेन नित्यज्ञानवान् ईश्वरः ॥ जीवेति ॥ सुखादिसमवायिकारणं जीवः ॥

**सुखाद्युपलब्धिसाधनमिन्द्रियं मनः । तच्च प्रत्यात्मनियतत्वादनन्तं परमाणुरूपं नित्यं च ॥**

( न्यायबो० ) मनो निरूपयति—सुखादीति ॥ उपलब्धिर्नाम साक्षात्कारः ॥ तथा च 'सुखादिसाक्षात्कारकारणत्वे सतीन्द्रियत्वं मनसो लक्षणम्[२] ॥ इन्द्रियत्वमात्रोक्तौ चक्षुरादावतिव्याप्तिः, अतः पूर्वदलम् ॥ विशेष्यानुपादाने आत्मन्यतिव्याप्तिः, आत्मनो[३] ज्ञानादिकंप्रति समवायिकारणत्वात् अतइन्द्रियत्वरूपविशेष्योपादानम्[४]

( पदकृ० ) सुखेति ॥ आत्ममनस्संयोगादिवारणाय 'इन्द्रियम्' इति ॥ चक्षुरादिवारणाय 'सुख' इति ॥

**चक्षुर्मात्रग्राह्यो गुणो रूपम् । तच्च शुक्लनीलपीतहरितरक्तकपिशचित्रभेदात्सप्तविधम् । पृथिव्यप्तेजोवृत्ति ।**

१ अत्रेति नास्ति । २ लक्षणं लब्धम् । ३ नः सुखादिकं प्रति । ४ अत आत्मन्यतिव्याप्तिवारणाय इन्द्रियत्वविशेष्यो ।

तत्रपृथिव्यांसप्तविधम् । अभास्वरशुक्लं जले।भास्व-रशुक्लं तेजसि ।

(न्यायबो०) रूपं लक्षयति-चक्षुर्मात्रेति॥चक्षुर्मात्रग्राह्य-त्वविशिष्टगुणत्ववत्त्वं रूपस्य लक्षणम् ॥ विशेष्यमात्रो-पादाने रसादावतिव्याप्तिः, अतः 'चक्षुर्मात्रग्राह्य' इति विशेषणम् ॥ तावन्मात्रोपादाने रूपत्वेऽतिव्याप्तिः 'यो गुणो यदिन्द्रियेण गृह्यते तन्निष्ठा जातिरपि तदिन्द्रियेण गृह्यते' अतस्तद्वारणाय विशेष्योपादानम् ॥ चक्षुर्मात्रग्रा-ह्यत्वं नाम चक्षुर्भिन्नेन्द्रियाग्राह्यत्वे सति चक्षुर्ग्राह्यत्वम् ॥ मात्रपदानुपादाने संख्या दिसामान्यगुणेऽतिप्याप्तिः, संख्यादावपि चक्षुर्ग्राह्यत्व विशिष्टगुणत्वस्यसत्त्वात्, अतस्तत्रातिव्याप्तिवारणाय मात्रपदम् ॥ संख्या देश्चक्षुर्भिन्नत्वग्ग्राह्यत्वाच्चक्षुर्मात्रग्राह्यत्वं नास्ति ॥ अत्र लक्षणे ग्राह्यत्वं नाम लौकिकप्रत्यक्षविषयत्वम् ॥ अग्राह्यत्वं नाम तदविषयत्वम् ॥ तथा च 'चक्षुर्भिन्नेन्द्रिय जन्य(लौकिक)साक्षात्काराविषयत्वे सतिचक्षुर्जन्यचाक्षुष विषयत्वम्' इति फलितोऽर्थः ॥ ननु[3] 'प्रभाघटसंयोगे रूपलक्षणस्यातिव्याप्तिः तस्य चक्षुर्[4]मात्रग्राह्यत्वात्' इति चेत्॥ न॥ गुणपदस्य विशेषगुणमात्रपरत्वात् ॥नचैवं वि-शेषगुणघटितलक्षणे संख्यादावतिव्याप्त्यभावान्मात्रप-दवैयर्थ्यम्' इति वाच्यम् ॥ जलमात्रवृत्तिसांसिद्धिकद्र-वत्वादावतिव्याप्तिवारणाय तदुपादानात् ॥ अथवा चक्षुर्मात्रग्राह्यजातिमद्गुणत्वस्य लक्षणत्वान्नप्रभाघटसं-

१ वत्त्वमिति कुत्रचिन्न । २ ग्राह्यत्वविशे । ३ ननु तथापि । ४ ग्राह्यगुणत्वात्, ग्राह्यत्वाविशिष्टगुणत्वात् । ५ मात्रपदंनास्ति ।

योगादावतिव्याप्तिः, संयोगत्वजातेश्चक्षुर्मात्रग्राह्यत्वाभावात् ॥ घटसंयोगस्य त्वगिन्द्रियग्राह्यत्वे[1]वत्तद्गतजातेरपि त्वगिन्द्रियग्राह्यत्वात् ॥ यो गुणो यदिन्द्रियग्राह्यः, तन्निष्ठजातेरपि तदिन्द्रियग्राह्यत्वात् ॥ अत्र जातिघटितलक्षणे गुणत्वानुपादानेचक्षुर्मात्रग्राह्यजातिमति सुवर्णादावतिव्याप्तिः तद्वारणाय तदुपादानम् ॥ एवं रसादिलक्षणे विशेषणानुपादाने लक्ष्यभिन्नगुणे[2]ऽतिव्याप्तिः ॥विशेष्यानुपादाने लक्ष्यमात्रवृत्तिरसत्वग[3]न्धत्वादावतिव्याप्तिः, अतो विशेषणविशेष्य[4]योरुपादानम् ॥

( पदकृ० ) चक्षुर्मात्रेति ॥ रूपत्वादिवारणाय गुणपदम् ॥ रसादिवारणाय ' चक्षुर्ग्राह्य ' इति । संख्यादिवारणाय मात्रपदम्॥यद्यपि प्रभाभित्तिसंयोगादिवारणाय गुणपदेन विशेषगुणस्य विवक्षणीयतया तत एव संख्यादिवारणे संभवति मात्रपदं व्यर्थम्, तथापि सांसिद्धिकद्रवत्ववारणाय तदावश्यकम् ॥ वस्तुतस्तु परमाणुरूपेऽव्याप्तिवारणाय चक्षुर्मात्रग्राह्यजातिमत्त्वस्य विवक्षणीयतया विशेषपदं न देयम् । त्र्यणुकादिवारणाय गुणपदं तु देयम् ॥ सप्तेति ॥ ' रूपम् ' इत्यनुषज्यते॥

**रसनग्राह्यो गुणो रसः । स च मधुराम्ललवणकटुकषायतिक्तभेदात्षड्विधः । पृथिवीजलवृत्तिः । तत्र पृथिव्यां षड्विधः । जलेतुमधुर एव ॥**

( पदकृ० ) रसनेति ॥ रसत्वादिवारणाय 'गुणः' इति ॥ रूपादिवारणाय 'रसन' इति ॥ तत्रेति ॥ पृथिवीजलयोर्मध्यइत्यर्थः ॥ षड्विध इति ॥ अत्र 'रस' इत्यनुवर्तते ॥

१ ग्राह्यत्वात्तद्ग । २ गुणादाव । ३ गन्धत्वपदंनास्ति । ४ ष्योभयोपादानम् ।
५ रूपादावतिव्याप्तिवारणाय ।

**घ्राणग्राह्यो गुणो गन्धः । स द्विविधः—सुरभिरसुरभिश्च ॥ पृथिवीमात्रवृत्तिः ॥**

( पदकृ० ) घ्राणेति ॥ गन्धत्वादावतिव्याप्तिवारणाय 'गुणः' इति ॥ रूपादावतिव्याप्तिवारणाय 'घ्राणग्राह्यः' इति ॥ पृथिवीति॥ 'गन्धमतीतिसत्त्वे पृथिवीसमवेतत्वसत्त्वम् पृथिवीसंबन्धाभावे गन्धमतीत्यभावः' इत्यन्वयव्यतिरेकाभ्यां पृथिवीगन्धस्यैव प्रतीतिर्जले बोध्या॥ ननु 'देशान्तरस्थकस्तूरीकुसुमसंबन्धिपवनस्यैतद्देशे संबन्धाभावाद्गन्धप्रतीत्यनुपपत्तिः ॥ नच ' वाय्वानीतत्र्यणुकादिसंबन्धोऽस्त्येव ' इति वाच्यम् ॥ कस्तूर्यां न्यूनतापत्तेः कुसुमस्य सच्छिद्रत्वापत्तेः " इति चेत् ॥ न ॥ भोक्त्रदृष्टविशेषेण पूर्ववत्र्यणुकान्तराद्युत्पत्तिः ॥ कर्पूरादौ तु तदभावान्न तथा ॥

**त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः । स त्रिविधः—शीतोष्णानुष्णाशीतभेदात् । पृथिव्यप्तेजोवायुवृत्तिः । तत्र शीतं जले । उष्णस्तेजसि । अनुष्णाशीतस्तु पृथिवीवाय्वोः ॥**

**( न्यायबो० ) स्पर्शं लक्षयति—त्वगिन्द्रियेति ॥ अत्रापि मात्रपदं संख्यादिसामान्यगुणादावतिव्याप्तिवारणाय ॥ अन्यद्विशेषणकृत्यं पूर्ववद्बोध्यम् । ग्राह्यत्वपदार्थोऽपिपूर्ववदेव प्रत्यक्षविषयत्वरूप एव बोध्यः ।**

( पदकृ० ) त्वगिति ॥ स्पर्शत्वादावतिव्याप्तिवारणाय 'गुणः' इति ॥ रूपादावतिव्याप्तिवारणाय ' त्वगिन्द्रिय— ' इति ॥ संख्यादिवारणाय मात्रपदम् ॥ तत्रेति ॥ पृथिव्यादिचतुष्टये ॥ शीतमिति ॥ शीतंगुणे इति कोशान्नपुंसकत्वम् ॥ उष्ण इति ॥ उष्णःस्पर्शः ॥

१ संबद्धसंयोगस्याव्याप्यवृत्तित्वादिति बोध्यम् ।

रूपादिचतुष्टयं पृथिव्यां पाकजमनित्यं च। अन्यत्रापाकजंनित्यमनित्यं च । नित्यगतं नित्यम् । अनित्यगतमनित्यम् ॥

( न्यायबो० ) रूपादीति ॥ एतत्तत्त्वनिर्णयश्चेत्थम्॥ पाको नाम विजातीयतेजस्संयोगः ॥ स च नानाजातीयरूपजनको विजातीयतेजस्संयोगः ॥ तदपेक्षया रसजनको विजातीयः ॥ एवं गन्धजनकोऽपि विजातीयः॥ एवं स्पर्शोऽपि तथैव ॥ एवंप्रकारेण भिन्नाभिन्नजातीयाः पाकाः कार्यवैलक्षण्येन कल्पनीयाः ॥ यथा तृणपुञ्जनिक्षिप्ते-आम्रादावूष्मलक्षणविजातीयतेजस्संयोगात्तु पूर्वहरितरूपनाशेन रूपान्तरस्य पीतत्वादेरुत्पत्तिः, न तु रसादेरुत्पत्तिः पूर्वरसस्यैवाम्लस्यानुभवात ॥ क्वचित्पूर्वहरितरूपस्य सत्त्वेऽपि रसपरावृत्तिर्दृश्यते, रसविजातीयतेजस्संयोगरूपपाकवशात्पूर्वतनाम्लरसनाशेनमधुररसस्यानुभवात् ॥ तस्मात्तद्रूपजनकापेक्षया रसजनको विलक्षण एव ॥ एवं गन्धजनकोऽपि विलक्षण एवाङ्गीकार्यः, रूपरसयोरपरावृत्तावपि पूर्वगन्धनाशेन विजातीयपाकवशात्सुरभिगन्धोपलब्धेः ॥ एवं स्पर्शेन पाकवशात्कठिनस्पर्शनाशेन मृदुस्पर्शानुभवात्॥तस्माद्रूपादिजनकविजातीयपाकाःभिन्नभिन्नाः॥अत एव पार्थिवपरमाणूनामेकजातीयत्वेऽपि पाकमहिम्नाविजातीयद्रव्यान्तरानुभवः॥ यथा गोभुक्ततृणादीनामापरमाण्वन्तभङ्गे तृणारम्भकपरमाणुषु विजातीयतेजस्संयोगात् पूर्वरूपादिचतुष्टय-

१ दर्शनात् । २ तस्माद्रूपजन० । ३ जनकपाको । ४ यथाकार्यमुन्नेयाः ।

नाशो तदनंतरं दुग्धे यादृशं रूपादिकं वर्तते तादृशरूपरसगन्धस्पर्शजनकास्तेजस्संयोगा जायन्ते, तदुत्तरं तैरेव तादृशरूपरसादय उत्पद्यन्ते ॥ एतादृशरूपरसादिविशिष्टपरमाणुभिर्दुग्धद्व्यणुकमारभ्यते, ततस्त्र्यणुकादिक्रमेणदुग्धारम्भ इति ॥ एवं दुग्धारम्भकैः परमाणुभिरेव दध्यारभ्यते पाकमहिम्ना ॥ एवं दध्यारम्भकैरेव परमाणुभिर्नवनीतारम्भ इति दिक् ॥

**एकत्वादिव्यवहारहेतुः संख्या । नवद्रव्यवृत्तिः । एकत्वादिपरार्द्धपर्यन्ता । एकत्वं नित्यमनित्यं च । नित्यगतं नित्यम् । अनित्यगतमनित्यम् । द्वित्वादिकं तु सर्वत्रानित्यमेव ॥**

( पदकृ० ) एकादीति ॥ 'एकत्वम्' इत्यादिर्यो व्यवहारः 'एकः द्वौ' इत्याद्यात्मकः । तस्य हेतुः संख्या, इत्यर्थः ॥ पटादिवारणाय 'एकत्वादि' इति तथा च–

"एकं दश शतं चैव सहस्रमयुतं तथा ।
लक्षं च प्रयुतं चैव कोटिरर्बुदमेव च ॥
वृन्दं खर्वो निखर्वश्च शंखं पद्मश्च सागरः ।
अन्त्यं मध्यं परार्द्धं च दशवृद्ध्या यथाक्रमम् ॥

इति उक्तेः परार्द्धपर्यन्तैव संख्यात्वम्, इति भावः ।

**मानव्यवहारासाधारणकारणं परिमाणम् । नवद्रव्यवृत्ति । तच्चतुर्विधम्–अणु महद्दीर्घं ह्रस्वं चेति ॥**

( पदकृ० ) मानेति ॥ 'मानं परिमितिः' तस्य यो व्यवहार-

१ रूपरसादिकम् । २ महादुग्धारम्भः । ३ तादिकमिति ।

'इदमणु' 'इदं महत्' इत्याद्यात्मकः, तस्य कारणं परिमाणम्' इत्यर्थः ॥ दण्डादिवारणाय 'मान' इति ॥ कालादिवारणाय 'असाधारणम्' इति ॥ शब्दत्ववारणाय 'कारणम्' इति ॥ **नवद्रव्येति** ॥ चतुर्विधमपि परममध्यमभेदेन द्विविधम् ॥ तत्र परमाणुत्वह्रस्वत्वे च परमाणुमनसोः ॥ मध्यमाणुत्वह्रस्वत्वे द्व्यणुके ॥ परममहत्त्वदीर्घत्वे गगनादौ ॥ मध्यममहत्त्वदीर्घत्वे घटादौ ॥ एतन्मौक्तिकादेतन्मौक्तिकमणु, इति व्यवहारस्य निकृष्टमहत्त्वाद्गौणत्वं बोध्यम् ॥ एवमेव 'केतनाद्व्यजनं ह्रस्वम्' इत्यत्रापि निकृष्टदीर्घत्वाद्गौणत्वम् ॥

**पृथग्व्यवहारासाधारणकारणं पृथक्त्वम्।सर्वद्रव्यवृत्ति॥**

( पदकृ० ) **पृथगिति** ॥ 'अयमस्मात्पृथक्' इति यो व्यवहारः तस्य कारणं पृथक्त्वम्, इत्यर्थः॥दण्डादिवारणाय'पृथक्—'इत्यादि ॥ कालादिवारणाय'असाधारण—'इति॥पृथग्व्यवहारत्ववारणाय'कारणम्'इति॥

**संयुक्तव्यवहारहेतुः संयोगः । नवद्रव्यवृत्तिः ।**

( पदकृ० ) **संयुक्तेति** ॥ 'इमौ संयुक्तौ' इति यो व्यवहारस्तस्य हेतुः संयोगः, इत्यर्थः ॥ दण्डादिवारणाय 'संयुक्तव्यवहार' इति ॥ कालादिवारणाय 'असाधारण' इत्यपि देयम् । संयुक्तव्यवहारत्वेऽतिव्याप्तिवारणाय 'हेतुः' इति ॥ उपदर्शितलक्षणचतुष्टये 'असाधारण' पदं देयम् ॥ क्वचित्पुस्तके परिमाणपृथक्त्वलक्षणे 'असाधारण' पदं दृश्यते 'तत्त्वाधुनिकैर्न्यस्तम्' इति बोध्यम् ॥

**संयोगनाशको गुणो विभागः । नवद्रव्यवृत्तिः ॥**

( न्याय० ) विभागं लक्षयति—संयोगेति ॥ संयोगनाशकत्वविशिष्टगुणत्वं विभागस्य लक्षणम् ॥ विशेषण-

१ सर्व । २ सर्व ।

मात्रोपादाने क्रियाया अपि संयोगनाशकत्वात्तत्राति-व्याप्तिवारणाय गुणत्वविशेषणम् ॥

( पदकृ ) संयोगेति ॥ संयोगनाशजनक इत्यर्थः ॥ काले ऽति-प्रसक्तिनिवारणाय गुणपदम् ॥ ईश्वरेच्छादिवारणाय 'असाधारण' इत्यपि बोध्यम् ॥ ननु 'असाधारणपदोपादाने गुणपदस्य वैयर्थ्यं स्यात्' इति चेत् ॥ न ॥ क्रियायामतिप्रसक्तिवारणाय तस्याप्यावश्यकत्वात् ॥

परापरव्यवहारासाधारणकारणे परापरत्वे । ते द्विविधे दिक्कृते कालकृते च । दूरस्थे दिक्कृतं परत्वम् । समीपस्थे दिक्कृतमपरत्वम् । ज्येष्ठे कालकृतं परत्वम् । कनिष्ठे कालकृतमपरत्वम् ॥

( पदकृ० ) परेति ॥ 'परव्यवहारासाधारणं कारणं परत्वम् ॥ अपरव्यवहारासाधारणकारणम् अपरत्वम्' इत्यर्थः ॥ दण्डादिवारणाय 'परव्यवहार' इति ॥ कालादिवारणाय 'असाधारण' इति । परव्यवहारत्ववारणाय 'कारण' इति ॥ एवमेव द्वितीयेपि बोध्यम् ॥

आद्यपतनासमवायिकारणं गुरुत्वम् । पृथिवीजलवृत्ति ॥

(न्यायबो०) गुरुत्वं लक्षयति-आद्येति ॥ द्वितीयपतनाक्रियायां वेगस्यैवासमवायिकारणत्वात्तत्रातिव्याप्तिवारणाय 'आद्य' इति ॥ उत्तरलक्षणेऽप्याद्यविशेषणं पूर्ववद्योजनीयम्

( पदकृ० ) आद्येति ॥ दण्डादिवारणाय 'असमवायि' इति ॥ रूपादिवारणाय 'पतन' इति । वेगेऽतिव्याप्तिवारणाय 'आद्य' इति

स्यन्दनासमवायिकारणं द्रवत्वम् । पृथिव्यप्तेजोवृत्ति । तद्द्विविधम् । सांसिद्धिकं नैमित्तिकंच । तत्र

सांसिद्धिकं जले । नैमित्तिकं पृथिवीतेजसोः। पृथिव्यां घृतादावग्निसंयोगजं द्रवत्वम् । तेजसि सुवर्णादौ ॥

( पदकृ० ) स्यन्दनेति ॥ दण्डादिवारणाय 'असमवायि' इति । रसादिवारणाय 'स्यन्दन' इति ॥

चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः । जलमात्रवृत्तिः ॥

( न्यायबो० ) स्नेहं लक्षयति—चूर्णादीति ॥ चूर्णादिपिण्डीभावहेतुत्वे सति गुणत्वं स्नेहस्य लक्षणम्॥पिण्डीभावो नाम चूर्णादिधारणाकर्षणहेतुभूतो विलक्षणसंयोगः ॥ तादृशसंयोगे स्नेहस्यैवासाधारणकारणत्वम् ॥ न तु जलादिगतद्रवत्वस्य[1] ॥ तथा सति द्रुतसुवर्णादिसंयोगेन चूर्णादिपिण्डीभावापत्तेः । अतः स्नेह एवासाधारणकारणम्॥विशेषणमात्रोपादाने कालादावतिव्याप्तिः, तद्वारणाय विशेष्योपादानम् ॥ वस्तुतस्तु द्रुतजलसंयोगस्यैव पिण्डीभावहेतुत्वम्, स्नेहस्य पिंण्डीभावहेतुत्वे मानाभावात्॥जले द्रुतत्वविशेषणात्करकादिव्यावृत्तिः ॥

( पदकृ० ) चूर्णादीति ॥ 'चूर्णं पिष्टं तदेवादिर्यस्य मृत्तिकादेः[3] स चूर्णादिः तस्य पिण्डीभावः संयोगविशेषः तस्य हेतुर्निमित्तकारणं स्नेहः' इत्यर्थः । कालादावतिव्याप्ति वारणाय गुणपदम् ॥ रूपादावतिव्याप्तिवारणाय 'पिण्डीभाव'[2] इति ॥ चूर्णपदं स्पष्टार्थम् ॥

श्रोत्रग्राह्यो गुणः 'शब्दः' । आकाशमात्रवृत्तिः । स द्विविधः ध्वन्यात्मको वर्णात्मकश्चेति । तत्र ध्वन्यात्मको भेर्यादौ, वर्णात्मकः संस्कृतभाषादिरूपः ।

---

१ द्रवत्वस्येत्यनन्तरम् 'असाधारणकारणत्वमस्तु इति नच वाच्यम्' इति कुत्रचित्पाठोस्ति ।
२ भावः । ३ रेतिकादेः ।

(न्यायबो०) शब्दं लक्षयति--श्रोत्रग्राह्य इति ॥ शब्दत्वेऽतिव्याप्तिवारणाय 'गुणः' इति ॥ स त्रिविधः संयोगजो विभागजः शब्दजश्चेति ॥ यथा ॥ भेरीदण्डसंयोगजन्यो भांकारादिशब्दः, हस्ताभिघातसंयोगादिजन्यो मृदङ्गादिशब्दः । वंशेपाट्यमाने दलद्वयविभागजन्यः पटपटादिशब्दः ॥ शब्दोत्पत्तिदेशमारभ्य कर्णविवरपर्यन्तं वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा निमित्तपवनसंबन्धाच्छब्दधारा जायते ॥ तत्रोत्तरोत्तरशब्दे पूर्वशब्दः कारणम् ॥

(पदकृ०) श्रोत्रेति ॥ शब्दत्वेऽतिव्याप्तिवारणाय 'गुणः' इति ॥ रूपादिवारणाय 'श्रोत्रग्राह्यः' इति ॥ वस्तुतस्तु श्रोत्रोत्पन्नशब्दस्यैव श्रोत्रग्राह्यत्वेन तद्भिन्ने ऽव्याप्तिवारणाय श्रोत्रग्राह्यजातिमत्त्वे तात्पर्याद्गुणपदमनुपादेयमेव ॥

**सर्वव्यवहारहेतुर्ज्ञानं बुद्धिः । सा द्विविधा-स्मृतिरनुभवश्च ॥**

(न्यायबो०) बुद्धेर्लक्षणमाह—सर्वव्यवहारेति ॥ व्यवहारः शब्दप्रयोगः, ज्ञानं विना शब्दप्रयोगासंभवाच्छब्दप्रयोगरूपव्यवहारहेतुत्वं ज्ञानस्य लक्षणम् ॥ बुद्धिं विभजते—स्मृतिरनुभवश्चेति ॥

(पदकृ०) बुद्धिलक्षणमाह—सर्वेति ॥ सर्वे ये व्यवहारा आहारविहारादयः तेषां हेतुर्बुद्धिः, इत्यर्थः ॥ दण्डादिवारणाय 'सर्वव्यवहार इति कालादिवारणाय 'असाधारण' इत्यपि देयम् ॥

**संस्कारजन्यं ज्ञानं स्मृतिः ॥**

---

१ भेर्यादिशब्दः । २ चटपटायमानशब्दः । ३ श्रोत्र । ४ निमित्तपवनेन शब्दसंबन्धधारा जा० ।

( न्यायबो० ) स्मृतिं लक्षयति- ( संस्कारेति ) ॥ संस्कारजन्यत्वविशिष्टज्ञानत्वं स्मृतेर्लक्षणम् ॥ विशेषणानुपादाने प्रत्यक्षानुभवेऽतिव्याप्तिः[1] तद्वारणाय विशेषणोपादानम् ॥ संस्कारध्वंसेऽतिव्याप्तिवारणाय विशेष्योपादानम् ॥ ध्वंसे प्रतियोगिनः कारणत्वात् संस्कारध्वंसेऽपि संस्कारजन्यत्वस्य सत्त्वात् ॥ प्रत्यभिज्ञायामनिव्याप्तिवारणायमात्रपदम् ॥

( पदकृ० ) संस्कारेति ॥ संस्कारध्वंसेऽतिव्याप्तिवारणाय 'ज्ञानम्' इति । अनुभवेऽतिव्याप्तिवारणाय 'संस्कारजन्यम्' इति । तथापि प्रत्यभिज्ञायामतिव्याप्तिवारणाय संस्कारमात्रजन्यत्वं विवक्षणीयम् ॥ क्वचित्तथैव पाठः ॥ नचैवं सत्यसंभवः ॥ तस्य संस्कारजन्यत्वे सतीन्द्रियार्थसंनिकर्षाजन्यार्थकत्वात् ॥

**तद्भिन्नं ज्ञानमनुभवः । स द्विविधः—यथार्थोऽयथार्थश्च ॥**

( न्यायबो० ) अनुभवं लक्षयति-(तद्भिन्नमिति ) तद्भिन्नत्वं नाम स्मृतिभिन्नत्वम् ॥ तत्र विशेषणानुपादाने स्मृतावतिव्याप्तिः, विशेष्यानुपादानेघटादावतिव्याप्तिः, अतस्तद्वारणायतयोरुपादानम्[2] ॥ अनुभवं विभजते—स द्विविध इति ॥

( पदकृ० ) तदिति ॥ स्मृतित्वावच्छिन्नभिन्नमित्यर्थः ॥ तेन यत्किंचित्स्मृतिभिन्नत्वस्य स्मृतौ सत्त्वेपि न क्षतिः । घटादावतिव्याप्ति वारणाय 'ज्ञानम्' इति ॥ स्मृतिवारणाय 'तद्भिन्नम्' इति ॥

**तद्वति तत्प्रकारकोऽनुभवो यथार्थः—सएवप्रमेत्युच्यते**

( न्यायबो० ) यथार्थानुभवं लक्षयति-तद्वतीति ॥

---

१ ध्वंसं प्रति स्वप्रतियो० । २ विशेषणविशेष्योभयोरु० ।

'तद्वति' इत्यत्र सप्तम्यर्थो विशेष्यत्वम्, तच्छब्देन प्रकारीभूतो धर्मो धर्तव्यः। तथा च तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वं यथार्थानुभवस्य लक्षणम्[1] ॥ उदाहरणम्—रजतत्ववद्विशेष्यकत्वे सति रजतत्वप्रकारकम्-रजते 'इदं रजतम्' इति ज्ञानं 'तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठ[2]प्रकारताशाल्यनुभवत्वम्, इति निष्कर्षः ॥ अन्यथायथाश्रुते, रङ्ग[3]रजतयोः 'इमे रङ्गरजते' इत्याकारकसमूहालम्बनभ्रमे ऽतिव्याप्तिः ॥ तत्रापि रजतत्ववद्विशेष्यकत्व-रजतत्वप्रकारकत्वयोः, रङ्गत्ववद्विशेष्यकत्वरङ्गत्वप्रकारकत्वयोः सत्त्वात् । उक्तनिष्कर्षे तु[4] नातिव्याप्तिः, तज्ज्ञानस्य रङ्गांशे रजतत्वप्रकारताया रङ्गत्ववन्निष्ठविशेष्यतानिरूपितत्वेपि रजतत्व[5]वद्विशेष्यतानिरूपितत्वभावात्, रजतांशे रङ्गत्वप्रकारताया रजतत्ववन्निष्ठ विशेष्यतानिरूपितत्वेपि रङ्गत्व[6]वद्विशेष्यतानिरूपितत्वाभावात्, किंतु समूहालम्बनभ्रमस्य रङ्गांशे रजतत्वावगाहित्वेन रजतत्वप्रकारताया रङ्गत्ववद्विशेष्यतानिरूपितत्वात् एवं, रजतांशे रङ्गत्वावगाहित्वेन रङ्गत्वप्रकारताया रजतत्ववद्विशेष्यतानिरूपितत्वाच्चेति ॥ (नानाधर्म[7]प्रकारताशालि एकं ज्ञानं समूहालम्बनम्) ॥

(पदकृ०) तद्वतीति ॥ तदेव प्रकारो यस्य स तथेत्यर्थः[8]। 'तद्वद्विशेष्यकतत्प्रकारकः' इति यावत् ॥ स्मृतिधारणा[9] 'अनुभवः' इति। अयथार्थानुभवनिरसनाय 'तद्वति' इति ॥ निर्विकल्पकेऽतिव्याप्तिवारणाय 'तत्प्रकारकः' इति ॥

---

१ तत्प्रकारकत्वेसत्यनुभवत्वम्। २ कुत्रचिन्निष्ठपदं नास्ति। ३ रजतरंगयो.। ४ उक्तभ्रमेइत्यधिकम्। ५ रजतत्ववद्रजताविशे। ६ रंगत्ववद्रंगाविशे। ७ नानागुणिविशेष्यतानिरूपित इत्यधिकं कुत्रचिदेव दृश्यते. तट्टिप्पणीरूपमिवाभाति.। ८ तद्वतीत्यर्थः। ९ वारणाय।

**तदभाववति तत्प्रकारकोऽनुभवोऽयथार्थः ॥**

(न्यायबो०) अयथार्थानुभवं लक्षयति–तदभाववतीति॥अत्रापिपूर्ववत् तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञा[1]नत्वं विवक्षणीयम् ॥ अन्यथा रङ्गरजतयोः 'इमे रङ्गरजते' इत्याका[2]रकसमूहालम्बनं[3] प्रमायामतिव्याप्तिः। एतत्समूहालम्बनस्य रङ्गरजतोभयविशेष्यकत्वेन रजतत्वरङ्गत्वोभयप्रकारकत्वेन च रजतत्वाभाववद्रङ्गनिष्ठविशेष्यकत्वरजतत्वप्रकारकत्वयोः,रङ्गत्वाभाववद्रजतविशेष्यकत्वरङ्गत्वप्रकारकत्वयोश्च सत्त्वात् ॥ निष्कर्षे[4] 'तु रजतांशे रजतत्वावगाहित्वेन रङ्गांशे रङ्गत्वावगाहित्वेन च र[5]जतत्वप्रकारताया रजतत्वाभाववद्रङ्गनिष्ठविशेष्यतानिरूपितत्वाभावात्, एवं र[6]ङ्गत्वप्रकारताया रङ्गत्वाभाववद्रजतविशेष्यतानिरूपितत्वाभावाच्च, नातिव्याप्तिः ॥ उदाहरणम्–यथा शुक्तौ 'इदं रजतम्' इति ॥

(पदकृ०) तदभाववतीति ॥ 'तदभाववद्विशेष्यकतत्प्रकारकोऽनुभवोऽयथार्थानुभवः' इति ॥ यथा शुक्तौ 'इदं रजतम्' इति ज्ञानम् । स्मृतिवारणाय 'अनुभवः' इति ॥ यथार्थानुभवनिरसनाय 'तदभाववति' इति ॥ निर्विकल्पकवार[7]णाय 'तत्प्रकारकः' इति ॥

**यथार्थानुभवश्चतुर्विधः–प्रत्यक्षानुमित्युपमितिशाब्दभेदात् ॥**

(न्यायबो०) यथार्थानुभवं विभजते–'चतुर्विधः' इति ॥

१ ज्ञानपदं कुत्रचिन्नास्ति २ कारकस्थले । ३ लम्बने । ४ उक्तनिष्क । ५ रजतांशे रजत । ६ रंगत्वांशेरंग । ७ खण्डनाय । इदमवतरणं कुत्रचिन्नास्ति ।

( पदकृ० ) यथार्थेति ॥ यथार्थानुभवः 'प्रत्यक्षमेव' इति चार्वाकाः, 'अनुमितिरपि' इति काणादबौद्धाः, 'उपमितिरपि' इति नैयायिकैकदेशिनः, 'शाब्दोऽपि' इति नैयायिकाः, 'अर्थापत्तिरपि' इति प्राभाकराः, 'अनुपलब्धिरपि' इति भाट्टवेदान्तिनौ, 'सांभविकैतिह्यकावपि' इतिपौराणिकाः, 'चैष्टिको ऽपि' इति तान्त्रिकाः ॥ एतेषां मतेऽस्वरसं संभाव्य तस्य चातुर्विध्यं स्पष्टं दर्शितम् ॥

## तत्करणमपिचतुर्विधम्–प्रत्यक्षानुमानोपमानशब्दभेदात् ॥

( न्यायबो० ) तत्करणमिति ॥ फलीभूतप्रत्यक्षादिकरणं चतुर्विधम् इत्यर्थः ॥ प्रत्यक्षादिचतुर्विधप्रमाणानां प्रमाकरणत्वं सामान्यलक्षणम् ॥ एकैकप्रमाण[2]लक्षणं तु वक्ष्यते, प्रत्यक्षज्ञानम्–, इत्यादिना ॥

( पदकृ० ) तदिति ॥ यथार्थानुभवात्मकप्रमायाः करणमित्यर्थः ॥

## असाधारणं कारणं करणम् ॥

( न्यायबो० ) करणलक्षणमाह—असाधारणमिति ॥ 'व्यापारवदसाधारणं कारणं करणम्, इत्यर्थः । असाधा[3]रणत्वं च 'कार्यत्वव्या[4]प्यधर्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वम्, इत्य[5]र्थः । यथा दण्डादौ घटं प्रत्यसाधारणकारण[6]त्वं–कार्यत्वव्याप्यो घटत्वादिरूपधर्मः, तदवच्छिन्नकार्यता घटे, तन्निरूपितकारणता दण्डे, अतो घटं प्रति दण्डो ऽसाधारणकारणम् । भ्रम्यादिरूपव्यापारवत्त्वाच्च करणम् ॥ साधारणत्वं च कार्य

१ अस्वरसात्तस्य । २ प्रमाणस्य । ३ आसाधारणं च । ४ कार्यत्वातिरिक्तधर्मा । ५ कुत्रचिन्नास्ति । ६ त्वं च । ७ कार्यत्वातिरिक्तो । ८ णत्वम् । ९ साधारणकारणत्वं च ।

त्वावच्छिन्नकार्यतानिरूपितकारणताशालित्वम् ॥ईश्वरे-च्छादृष्टादेः कार्यत्वावच्छिन्नंप्रत्येव कारणत्वात्साधारण-कारणत्वम् ॥

( पदकृ० ) असाधारणमिति कालादिवारणाय ' असाधारणम्' इति ' व्यापारे ऽतिव्याप्तिवारणाय ' व्यापारवद् ' इत्यपि देयम् ॥ व्यापारश्च द्रव्यान्यत्वे सति तज्जन्यत्वे सति तज्जन्यजनकः । इश्वरे च्छादिवारणाय' तज्जन्यत्वे सति' इति ॥ कुलालजन्यत्वे सति कुला-लजन्यघटजनकत्वं कुलालपुत्रस्याप्यस्ति, अतस्तत्रातिव्याप्तिवारणाय प्रथमं सत्यन्तम् ॥ दण्डरूपादिवारणाय तज्जन्यजनकः ' इति ॥

## [2]कार्यनियतपूर्ववृत्ति कारणम् ॥

( न्यायबो० ) कारणं लक्षयति—कार्यनियतेति ॥ कार्यं[3] प्रति नियतत्वे सति पूर्ववृत्तित्वम्[3] ॥ नियतत्ववि-शेषणा[4]नुपादाने पूर्ववर्तिनो रासभादेरपि घटा[6]दिकार णत्वं स्यात, अतो ' नियतत्वे सति, इति विशेषणम् ॥ नियतपूर्ववर्तिनो दण्डरुपादेरपि घटकारणत्वं स्यात, अतः ' अनन्यथासिद्धत्वम् ' अपि कारणं[10]लक्षणे निवेश-नीयम्, दण्डरूपा[11]देरन्यथासिद्धत्वात ॥

( पदकृ० ) कार्येति ॥ 'कार्यान्नियताऽवश्यंभाविनी पूर्ववृत्तिः पूर्वक्षणवृत्तिर्यस्य तत्तथा ' इत्यर्थः ॥ अनियतरासभादिवारणाय 'नियत' इति । कार्यवारणाय ' पूर्व ' इति । दण्डत्वादिवारणाय ' अनन्यथा-सिद्धत्व[12]' विशेषणस्यावश्यकत्वेन तत एव रासभादिवारणसंभवे

---

१ ईश्वरादृष्टादेः । २ अनन्यथासिद्धाका । ३ कारणत्वम् । ४ विशेषणाभावे । ५ नियतपूर्वव । ६ घटादीतिकुत्राचिन्न । ७ नियतविशेषणम् । ८ घटादिकारणता । ९ सिद्धपदमपि । १० कारणत्वल । ११ दीर्नातुअ ।

नियतपदमनर्थकम् ॥ एवं च ' अनन्यथासिद्धकार्[1]यपूर्ववृत्ति कारणम् ' इति फलितम् ॥ अनन्यथासिद्धत्वमन्यथासिद्धिशून्यत्वम् । अन्यथा सिद्धिश्च ' अवश्यक्लृप्तपूर्[2]ववर्तिन एव कार्यसंभवेतत्सहभूतत्वम् ' । यथा—अवश्यय्यत्क्लृप्तनियतपूर्ववर्तिभिर्दण्डादिभिरेव घटरूपकार्यसंभवे [3]तत्सहभूतत्वं दण्डत्वादौ, इति तदन्यथासिद्धम् ॥

## कार्यं प्रागभावप्रतियोगि ॥

( न्यायबो० ) कार्यं लक्षयति—प्रागिति ॥ प्रागभावप्रतियोगित्वं कार्यस्य लक्षणम् ॥ कार्योत्पत्तेः पूर्वम् ' इह घटो भविष्यति, इति या प्रतीतिर्जायते तत्प्रतीतिविषयो[4]ऽभावः ' प्रागभावः ' तत्प्रतियोगि घटादिरूपं कार्यम् ॥

( पदकृ० ) प्रागिति ॥ कालादिवारणाय ' प्राग् ' इति ॥ असंभववारणाय ' प्रतियोगि ' इति ॥

## कारणं त्रिविधम्—समवाय्यसमवायिनिमित्तभेदात् ॥

( न्यायबो० ) कारणं त्रिविधमिति ॥ समवायिकारणम्, असमवायिकारणं, निमित्तकारणं चेति ॥

## यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम् । यथा तन्तवः पटस्य पटश्च स्वगतरूपादेः ॥

( न्यायबो० ) समवायिकारणं लक्षयति—यत्समवेतमिति ॥ ' यस्मिन् समवेतं सत् समवायेन संबद्धं सत् कार्यम् उत्पद्यते तत्समवायिकारणम् , इत्यर्थः ॥ उदाहरणम्—' यथा तन्तवः ' इति । ' तन्तुषु समवायेन संबद्धं सत् पटात्मकं कार्यमुत्पद्यते इति तन्तवः सम-

---

१ कार्यपदं नास्ति. २ क्लृप्तनियतपू-. ३ भूतदण्ड- ४ विषयीभूतोऽभा.।

वायिकारणम्, इत्यर्थः ॥ सामान्यलक्षणं तु—'समवायसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणताश्रयत्वं समवायिकारणत्वम्' इति। समवायसंबन्धेन घटाद्यधिकरणे कपालादौ कपालादेस्तादात्म्यसंबन्धेनैव सत्त्वात् समवायसंबन्धावच्छिन्नघटत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्न[1]कारणतायाः कपालादौ सत्त्वाल्लक्षणसमन्वयः ॥ 'जन्यभावत्वावच्छिन्नं प्रति तादात्म्यसंबन्धेन द्रव्यस्यैव कारणत्वात्। जन्यभावेषु द्रव्यगुणकर्मसु त्रिषु द्रव्यमेव समवायिकारणम्' अतो गुणादावपि द्रव्यमेव समवायिकारणम् इत्याशयेनाह—पटश्च स्वगतरूपादेः' इति ॥ 'समवायिकारणम्' इत्यनुषज्यते॥

( पदकृ० ) यदिति ॥ 'यस्मिन् समवायसंबन्धेन वर्तमानं' तत् इति भावः । चक्रा[3]दिवारणाय 'समवेतम्' इति ॥

**कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतत्वे सति कारणमसमवायिकारणम् । यथा तन्तुसंयोगः पटस्य । तन्तुरूपं पटगतरूपस्य ॥**

( न्यायबो० ) असमवायिकारणं लक्षयति—कार्येणेति ॥ 'कार्येण सहैकस्मिन्नर्थे समवेतं सद्यत् कारणं तदसमवायिकारणम्' इत्यन्वयः । 'कारणेन सहैकस्मिन्नर्थे समवेतं सद्यत् कारणं तदसमवायिकारणम्' इत्यर्थ[4]-न्वयः ॥ जन्यद्रव्यमात्रे ऽवयवसंयोगस्यैवासमवायिकारणत्वात्, 'पटात्मककार्ये तदवयवतन्तुसंयोगस्यैवासम-

---

१ वच्छिन्नकपालत्वाच्छिन्नकार. । २ ' द्रव्ये तु द्रव्यावयवाः समवायिकारणअतो ' ३ त्वगादि । ४ इत्यर्थः । ५ द्रव्ये ।

वायिकारणत्वम्' इति दर्शयति--'यथा तन्तुसंयोगः पटस्य' इति ॥ पटात्मककार्येण सहैकस्मिन्नर्थे तन्तौ समवेतंसत् समवायसंबन्धेन वर्तमानं सत् पटात्मककार्यं प्रति तन्तुसंयोगात्मकंकारणमसमवायिकारणमित्यर्थः। द्वितीयमसमवायिकारणं 'कारणेन सह' इत्यादिना पूर्वोक्तमुदाहरति--'तन्तुरूपम्' इति ॥ कारणेन सह पटरूपसमवायिकारणीभूतपटेन सह एकस्मिन्नर्थे तन्तु रूपेऽर्थे समवेतं सत् समवायसंबन्धेन वर्तमानं सत् तन्तुरूपं पटरूपं प्रति कारणं भवति, अतोऽसमवायिकारणं तन्तुरूपं पटरूपस्य ॥ सामान्यलक्षणं तु 'समवायसंबन्धावच्छिन्नकार्यतानिरूपिता या समवायस्वसमवायिसमवेतत्वान्यतरसंबन्धावच्छिन्ना कारणता ताद्दशकारणताश्रयत्वम् असमवायिकारणत्वम्' इति॥ द्रव्यासमवायिकारणीभूतावयवसंयोगादौ तु समवायसंबन्धावच्छिन्नघटत्वावच्छिन्नकार्यतानिरूपिता समवायसंबन्धावच्छिन्ना कपालद्वयसंयोगनिष्ठा कारणता कपालद्वयसंयोगे वर्तते ॥ एवम् आद्यपतनक्रियायां आद्यस्यन्दनक्रियायां च गुरुत्वद्रवत्वे असमवायिकारणे भवतः । आद्यपतनक्रियांप्रति आद्यस्यन्दनक्रियां प्रति च समवायसंबन्धेनैव तयोः कारणत्वात् ॥ अवयविगुणादौ त्ववयवगुणादेः स्वसमवायिसमवेतत्व संबन्धेनैव कारणत्वात् तत्संबन्धावच्छिन्नकारणताश्रयत्वमवयवगुणादौ वर्तते ॥ अवयवगुणभूतकपालतन्तुरूपादेःस्वशब्दग्राह्यकपालरूपतन्तुरूपसमवायिकपालत-

---

१ दर्शयाति । २ तदाश्रयत्वन् ।

न्तुसमवेतत्वसंबन्धेन घटपटादौ कपालरूपतन्तुरूपयोः सत्वात् लक्षणसंगतिः ॥

( पदकृ० ) कार्येणेति ॥ कार्येण सह कारणेन सह वा एकस्मिन्नर्थसमवेतत्वे सति, आत्मविशेषगुणभिन्नत्वे सति, यत्कारणं तदसमवायिकारणम् ॥ तन्तुसंयोगादावव्याप्तिवारणाय 'कार्येण' इति ॥ तन्तुरूपादावव्याप्तिवारणाय 'कारणेन' इति ॥ आत्मविशेषगुणेऽतिव्याप्तिवारणाय 'आत्मविशेषगुणभिन्नत्वे सति' इति ॥ विशेषवारणाय 'कारणम्' इति ॥

**तदुभयभिन्नं कारणं निमित्तकारणम् । यथा—तुरीवेमादिकं पटस्य ॥**

( न्यायबो० ) तदुभयभिन्नमिति ॥ 'समवाय्यसमवायिकारणभिन्नम्' इत्यर्थः ॥

( पदकृ० ) तदुभयभिन्नं कारणं निमित्तकारणम् इति ॥ समवाय्यसमवायिकारणवारणाय 'तदुभयभिन्नम्' इति । विशेषादावतिव्याप्तिवारणाय 'कारणम्' इति ॥

**तदेतत्त्रिविधकारणमध्ये यदसाधारणंकारणंतदेवकरणम्**

( न्यायबो० ) तदेतदिति ॥ 'यदसाधारणम्' इति ॥ व्यापारवत्त्वे सति, इत्यपि पूरणीयम् ॥ अन्यथा तन्तुकपालसंयोगयोरतिव्याप्तिः, तन्तुकपालसंयोगयोरपिकार्यत्वव्याप्यपटत्वघटत्वाद्यवच्छिन्नं प्रति कारणत्वादसाधारणत्वमस्त्येवेति, अतस्तत्र करणत्ववारणाय 'व्यापारवत्त्वे सति' इति करणलक्षणे विशेषणं देयम् ॥ व्यापारत्वं

१ कार्येण कारणेन सहैक- । २ वायिभिन्नकारणमित्य । ३ गादौ । ४ कार्यत्वातिरिक्त ।

च तज्जन्यत्वे सति तज्जन्यजनकत्वम् ॥ भवति हि दण्डजन्यत्वे सति दण्डजन्यघटजनकत्वाद् भ्रम्यादेर्दण्डव्यापारत्वम् ॥ एवं कपालसंयोगतन्तुसंयोगादेरपि कपालतन्तुव्यापारत्वम् कपालतन्वादिजन्यत्वे सति कपालतन्त्वादिजन्यघटपटादिजनकत्वात् ॥ करणलक्षणे ऽसाधारणत्वविशेषणानुपादाने ईश्वरादृष्टादेरपि व्यापारवत्त्वे सति कारणत्वात्करणत्वंस्यात् । अतः तत्रातिव्याप्तिवारणाय 'असाधारण' इति पदोपादानम् ॥

( पदकृ० ) तदेतदिति ॥ यस्मात्कारणात् करणत्व[1]घटकं कारण मुपदर्शितम् तस्मादेतत्त्रिविधसाधकमध्ये यत्साधकतमं तदेव करणम् इति भावः ॥ इति करणप्रपञ्चः ॥

तत्र प्रत्यक्षज्ञानकरणं प्रत्यक्षम् ॥

( न्यायबो० ) षड्विधेन्द्रियभूतप्रत्यक्षप्रमाणस्य[2] लक्षणमाह–तत्रेति ॥ प्रमाणभूतेषु, प्रत्यक्षात्मिकं यज्ज्ञानं चाक्षुषादि[3]प्रत्यक्षं तत्प्रति क[4]रणं व्यापारवदसाधारणम् इन्द्रियं भवति, अतः प्रत्यक्षज्ञानकरणत्वं प्रत्यक्षस्य लक्षणम् ॥ आद्यसंनिकर्षातिरिक्तचतुर्विधसंनिकर्षाणां समवायघ[5]टितत्वेनेन्द्रियजन्यत्वाभावाद्व्यापार[6]त्वं न संभवति, इतीन्द्रियमनस्संयोगस्यैव षड्वि[7]धप्रत्यक्षे जननीये इन्द्रियव्यापारता बोध्या ॥

( पदकृ० ) तत्रेति ॥ प्रमाणचतुष्टयमध्ये ॥ दण्डादिसंयोग[8]वारणाय 'ज्ञान' इति ॥ अनुमानादिवारणाय 'प्रत्यक्ष' इति ॥

ज्ञानाकरणकं ज्ञानं प्रत्यक्षम् ॥ इन्द्रियार्थसंनि-

---

१ करणघ । २ यस्यणौं नास्ति । ३ षड्विधप्रत्य । ४ कारणंव्यापार वदसाधारण कारणमिन्द्रिय । ५ समवायरूपत्वेन । ६ संभवात् । ७ बाह्यम । ८ संयोगपदं कुत्रचिन्नास्ति ।

कर्षजन्यंज्ञानं प्रत्यक्षम्।तद्द्विविधम्–निर्विकल्पकं सविकल्पकं चेति ॥

( न्यायबो० ) प्रत्यक्षप्रमाणलक्षणमुक्त्वा[1] प्रत्यक्षप्रमायालक्षणमाह–ज्ञानाकरणकमिति।क्षेपकं[2] लक्षणमिदम् ज्ञानं व्याप्तिज्ञानं सादृश्यज्ञानं पदज्ञानं च तदेव करणं येषां तानि ज्ञानकरणकानि अनुमित्युपमितिशाब्दानि तद्भिन्न[3] ज्ञानाकरणकं यज्ज्ञानं [तत्त्वम्] प्रत्यक्षप्रमायालक्षणम्।प्रत्यक्षे इन्द्रियाणामेव करणत्वात्, न तु ज्ञानस्य करणत्वम् इतिसमन्वयः ॥ इदं लक्षणमीश्वरप्र[4]त्यक्षसाधारणम् ईश्वरप्र[5]त्यक्षस्यज्ञानकरणकत्वात् । इन्द्रियार्थसंनिकर्षेति । जन्यप्रत्यक्षस्यैव लक्ष्यत्वाभिप्रायेणेदम्[6] ॥ प्रत्यक्षं विभजते–'निर्विकल्पकम्' इति ॥

( पदकृ० ) इन्द्रियार्थेति ॥ इन्द्रियं चक्षुरादिकम्, अर्थो घटादिः तयोः संनिकर्षः संयोगादिः, तज्जन्यं ज्ञानं प्रत्यक्षम्' इत्यर्थः । संनिकर्षध्वंसवारणाय 'ज्ञानम्' इति । अनुमित्यादिवारणाय 'इन्द्रियार्थ संनिकर्ष' इति ॥ ननु 'सोपनेत्रचक्षुषा कथं पदार्थग्रहणम्, चक्षुष-उपनेत्रनिरुद्धत्वेन पदार्थेन सह संनिकर्षाभावात्'कथं वा स्वच्छजान्हवीसलिलावृतमत्स्यादेश्चक्षुषा ग्रहणम्' इति चेत्, न । स्वच्छद्रव्यस्य पदार्थनिरोधकत्वाभावेन तदन्तश्चक्षुःप्रवेशसंभवात् ॥ नचईश्वरप्रत्यक्षेऽव्याप्तिः, इति वाच्यम् । अत्र जन्यप्रत्यक्षस्यैव लक्षितत्वात् ।

तत्र निष्प्रकारकं ज्ञानं निर्विकल्पकम् ॥

---

१ उक्तम्. २ प्रत्यक्षप्रमालक्षणम्. ३ तद्भिन्नत्व प्रत्यक्षे । ४ ईश्वरीय । ५ ईश्वरीय । ६ इदं लक्षणम् ।

( न्यायबो० ) निष्प्रकारकमिति ॥ 'प्रकारताशून्यत्वमेव निर्विकल्पकत्वम्' इत्यर्थः ॥ निर्विकल्पके चतुर्थी विषयता स्वीक्रियते नतु त्रिविधविषयतामध्ये काऽपि तत्रास्ति । अतो 'विशेष्यताशून्यज्ञानत्वम्' इत्यपि लक्षणं संभवति ॥

(पदकृ०) तत्र निष्प्रकारकमिति ॥ सविकल्पकेऽतिव्याप्तिवारणाय 'निष्प्रकारकम्' इति । प्रकारवारणाय 'ज्ञानम्' इति ॥

**सप्रकारकं ज्ञानं सविकल्पकम् ॥ यथा—डित्थोऽयम्, ब्राह्मणोऽयम्, श्यामोयम्' इति ॥**

( न्यायबो० ) सप्रकारकमिति ॥ विषयताया ज्ञाननिरूपितत्वात् ज्ञानस्य विषयतानिरूपकत्वेन, प्रकारतानिरूपकज्ञानत्वं सविकल्पकस्य लक्षणम् ॥ उदाहरणम्—यथेति । इदंत्वावच्छिन्नविशेष्यतानिरूपितडित्थत्वप्रकारताशालिज्ञानं ब्राह्मणत्वप्रकारताशालिज्ञानं च सविकल्पकमित्यर्थः ॥

( पदकृ० ) सप्रकारेति॥ घटादिवारणाय 'ज्ञानम्' इति निर्विकल्पकवारणाय 'सप्रकारकम्' इति ॥

**प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसंनिकर्षः षड्विधः—संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः समवेतसमवायः, विशेषणविशेष्यभावश्चेति ॥**

( न्यायबो० ) चाक्षुषादिषड्विधप्रत्यक्षकारणीभूतान्षड्विधसंनिकर्षान्विभजते 'संयोगः' इत्यादिना ॥ द्रव्य-

---

१ कुत्राचिन्नोपलभ्यते । २ एकापि । ३ विशेषणताशून्यत्वमिव विशेष्यताशून्यत्वं संसर्गताशून्यत्वमित्वपिल ।

वृत्तिलौकिकविषयतासंबन्धेन चाक्षुषत्वावच्छिन्नं प्रतिचक्षुस्संयोगः कारणत्वम् । द्रव्यसमवेतवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषत्वावाच्छिन्नं प्रति चक्षुस्संयुक्तसमवायस्य हेतुत्वम् । द्रव्यसमेतसमवेतवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषत्वावच्छिन्नंप्रति चक्षुःस्संयुक्तसमवेतसमवायस्य हेतुत्वम् । द्रव्यग्राहकाणीन्द्रियाणि चक्षुस्त्वङ्मनांसि त्रीण्येव । अन्यानि घ्राणरसनश्रवणानि तु गुणग्राहकाणि ॥ अतस्त्वगिन्द्रियस्थले द्रव्यवृत्तिलौकिकविषयतासंबन्धेन त्वाचे[1]त्वावच्छिन्नं प्रति त्वक्संयोगस्य हेतुता ॥ एवं द्रव्य[2]समवेतत्वाचत्वावच्छिन्नं प्रति त्वक्संयुक्तसमवायस्य हेतुता । द्रव्यसमवेतसमवेतोष्णत्वशीतत्वादिजातिस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवेतसमवायस्य हेतुता।एवम् आत्मरूपद्रव्यमानसप्रत्यक्षे मनःस्संयोगस्य हेतुता।आत्मसमवेतसुखादिमानसप्रत्यक्षे मनस्संयुक्तसमवायस्य हेतुता । आत्मसमवेतसमवेतसुखत्वादिमानसप्रत्यक्षे मनस्संयुक्तसमवेतसमवायस्य हेतुता ॥ रसनघ्राणयोस्तु रसोगन्धतद्गतजातिग्राहकत्वेन द्वितीयतृतीययोः संनिकर्षयोरेव [3]तत्र हेतुता वाच्या ॥ श्रवणेन्द्रियस्याकाशरूपत्वेन शब्दस्याकाशगुणत्वेन श्रवणेन्द्रिये[4]ण समं शब्दस्य समवायः संनिकर्षः । शब्दवृत्तिशब्दे[5]त्वजातिविषयकश्रावणप्रत्यक्षे समवेतसमवायस्य हेतुता॥अभावप्रत्यक्षे इति॥ विशेषणविशेष्यभावो नाम

---

१ त्वाचप्रत्पक्षत्वा । २ द्रव्यसमवेतविषयकत्वाचप्रत्यक्षत्वा । ३ चेत्यधिकम् ।
४ रसगन्धप्रत्यक्षेइत्यर्थः । ५ शब्दत्वकत्वखत्वगत्वादि ।

विशेषणतासंनिकर्षः । पञ्चविधसंनिकर्षोपरि विशेषणता योजनीया तथाहि—द्रव्याधिकरणकाभावप्रत्यक्षे संयुक्त-विशेषणता । द्रव्यसमवेताधिकरणकाभावप्रत्यक्षे इन्द्रि-यसंयुक्तसमवेतविशेषणता । द्रव्यसमवेतसमवेताधिकर णकाभावप्रत्यक्षे इन्द्रियसंयुक्तसमवेतसमवेतविशेषणता संयोगस्थाने संयुक्तत्वं घटयित्वा समवायस्थाने समवे-तत्वपदं घटयित्वा अभावप्रत्यक्षस्थले निर्वाह्यम्॥ यथा घटद्रव्यसमवेतं घटत्वं पृथिवीत्वादि[2] रूपादिकं च॥ तत्र नीलादौ पीतत्वाभावः, घटत्वादिजातौ पटत्वाभावश्च वर्तते । स चाभावः संयुक्तसमवेतविशेषणतासंनिकर्षेण गृह्यते । ( एवं नीलत्वादिजातौ पीतत्वाभावोऽपीन्द्रिय-संयुक्तसमवेतसमवेतविशेषणतासंनिकर्षेण गृह्यते ) । पटसमवेतं नीलं, तत्समवेतं नीलत्त्वम्, तद्विशेषणता पीतत्वाभावेवर्तत इति संक्षेपः॥

( पदकृ० ) प्रत्यक्षेति ॥ तच्च प्रत्यक्षं-षड्विधम्-घ्राणज-रासन-चाक्षुष श्रौत्रंत्वाच-मानसभेदात् ॥ ननु 'प्रत्यक्षकारणीभूतेन्द्रियसं-नि[3]कर्षप्रत्यक्षसामानाधिकरण्यघटकः संनिकर्षः कः' इत्यपेक्षायां विभज्य दर्शयाति प्रत्यक्षेति । 'लौकिकप्रत्यक्ष' इत्यर्थः॥

चक्षुषा घटप्रत्यक्षजनने संयोगः संनिकर्षः ।

( पदकृ० ) संयोगमुदाहरति चक्षुषेति ॥ तथा च 'द्रव्यचाक्षुष त्वाचमानसेषु संयोग एव संनिकर्षः' इति भावः॥

घटरूपप्रत्यक्षजनने संयुक्तसमवायः संनिकर्षः । चक्षुःसंयुक्ते घटे रूपस्य समवायात्

---

१ संयोगस्थाने समवायस्थानेच संयुक्तपदं समवेतपदं च । २ दिक् । ३ निष्ठ ।

( पदकृ० ) घटरूपेति ॥ 'चक्षुषा' इत्यनुषज्जते ॥ तथा च द्रव्यसमवेतचाक्षुषरासनघ्राणजस्पार्शनमानसेषु[2] संयुक्तसमवाय एव संनिकर्ष इत्यर्थः ॥

**रूपत्वसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः संनिकर्षः। चक्षुः संयुक्ते घटे रूपं समवेतम्, तत्र रूपत्वस्य समवायात् ॥**

( पदकृ० ) रूपत्वेति ॥ रूपत्वात्मकं यत्सामान्यम्, तत्प्रत्यक्ष इत्यर्थः अत्रापि 'चक्षुषा' इत्यनुषज्यते ॥ तथा च 'द्रव्यसमवेतसमवेत चाक्षुषरासनघ्राणजस्पार्शनमानसेषु संयुक्तसमवेतसमवाय एव संनिकर्षः' इति भावः ॥ अथ 'द्रव्य तत्समवेतप्रत्यक्षेऽपि संयुक्तसमवाय एव संनिकर्षोऽस्तु' इति चेत् नैतत् । ईश्वरात्मादेरनध्यक्षत्व प्रसंगात् ॥

**श्रोत्रेण शब्दसाक्षात्कारे समवायः संनिकर्षः कर्ण-विवरवर्त्याकाशस्य श्रोत्रत्वात् । शब्दस्याकाशगुणत्वात् । गुणगुणिनोश्च समवायात् ॥**

( पदकृ० ) समवायसंनिकर्षमुदाहरति श्रोत्रेणेति ॥ 'जननीये' इति शेषः ननु 'श्रोत्रशब्दयोः कथं समवायः' इत्यपेक्षमाणं प्रति तमुपपाद्य दर्शयति—कर्णेति ॥ अथ 'समवायस्य नित्यत्वेन शब्दप्रत्यक्षे को व्यापारः' इति चेत् ॥ 'शब्दः श्रोत्रमनःसंयोगो वा' इति गृहाण ॥

**शब्दत्वसाक्षात्कारे समवेतसमवायः संनिकर्षः । श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात् ॥**

---

१ चक्षुषा जनन इति । २ चाक्षुषत्व:चमानसरासनघ्राणजेषु ।

( पदकृ० ) शब्दत्वेति ॥ श्रोत्रेण ' ' जननीये ' इत्यनुकर्षशेषौ॥

**अभावप्रत्यक्षे विशेषणविशेष्यभावः संनिकर्षः। घटाभाववद्भूतलम्, इत्यत्र चक्षुःसंयुक्ते भूतले घटाभावस्य विशेषणत्वात् ॥**

( पदकृ० ) **विशेषणेति** ॥ विशेषणभावो **विशेष्यभावः**। इन्द्रियसंबद्धविशेषणत्वम्, इन्द्रियसंबद्धविशेष्यत्वम्, इति यावत् ॥ विशेषणभावसंनिकर्षमुपपाद्य दर्शयति—**घटाभाववदिति** ॥ ' इह भूतले घटोनास्ति ' इत्यादौ विशेष्यतासंनिकर्षोऽवसेयः। सप्तम्यन्तस्य विशेषणत्वात् ॥

**एवं संनिकर्षषट्कजन्यं ज्ञानं प्रत्यक्षम् ॥**

( पदकृ० ) प्रत्यक्षप्रमाणमुपसंहरति **एवमिति**। ' उपदर्शितक्रमेण ' इत्यर्थः।

**तत्करणमिन्द्रियम्। तस्मात् 'इंद्रियं प्रत्यक्षप्रमाणम्' इति सिद्धम् ॥**

( पदकृ० ) ननु ' सिद्धान्ते प्रत्यक्षज्ञानकरणमिन्द्रियार्थसंनिकर्षः किं न स्यात् ' इति चेत् ॥ 'न' इत्याह[2]—**तत्करणमिति** ॥ प्रत्यक्ष प्रमाणं निगदयति[3]—**तस्मादिति** ॥ प्रत्यक्षप्रमाणकरणत्वादित्यर्थः ॥ **सिद्धमिति** ॥ न्यायसिद्धान्ते सिद्धमित्यर्थः ॥

इति प्रत्यक्षपरिच्छेदः समाप्तः।

---

**अनुमितिकरणमनुमानम् ॥**

**( न्यायबो० ) अनुमानं**[4] **लक्षयति—अनुमितीति** ॥

---

१ वक्ष्येति बोध्यम्। २ व्यापारत्त्वाभावादिति भाव। 'फलायोगव्यवच्छिन्नं कारणम् इति मते तु संनिकर्ष एव प्रत्यक्षप्रमाणम् इति बोध्यम्। ३ निगमयति। ४ अवतरणप्राक् कुत्रचिन्न स्तः।

अनुमितौ व्याप्तिज्ञानं करणम्, परामर्शो व्यापारः, अनुमितिः फलं कार्यमित्यर्थः ॥ परामर्शस्य व्याप्तिज्ञानजन्यत्वात् व्याप्तिज्ञानजन्यानुमितिजनकत्वाच्चतज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्यापारलक्षणमुपपन्नम् ॥ अनुमितिकरणत्वमनुमानस्य लक्षणम् । अनुमानं च व्याप्तिज्ञानम् । एतस्य परामर्शरूपव्यापारद्वारा अनुमितिं प्रति असाधारणकारणतया ऽनुमितिकरणत्वमुपपन्नम् ॥

( पदकृ० ) प्रत्यक्षानुमानयोः कार्यकारणभावसंगतिमभिप्रेत्य प्रत्यक्षानन्तरमनुमानं निरूपयति **अनुमितीति** ॥ 'अनुमितेः करणमनुमानम्' इत्यर्थः तच्च 'लिङ्गपरामर्श एव' इति निवेदयिष्यते ॥ कुठारादाव तिव्याप्तिवारणाय 'अनुमिति' इति । प्रत्यक्षादावतिव्याप्तिवारणाय 'अनु' इति ॥

## परामर्शजन्यं ज्ञानमनुमितिः ।

( न्यायबो० ) परामर्शजन्यामिति ॥ 'परामर्शजन्यत्वे सति' इति सतिसप्तम्या विशिष्टत्वमर्थः । परामर्शजन्यत्वविशिष्टज्ञानत्वमनुमितेर्लक्षणम् ॥ तत्र ज्ञानत्वमात्रोपादाने प्रत्यक्षादावतिव्याप्तिः, अतस्तद्वारणाय 'परामर्शजन्यत्वे सति' इति विशेषणोपादानम् । विशेषणमात्रोक्तौ तु तद्ध्वंसे ऽतिव्याप्तिः, अतो ज्ञानत्वोपादानम् ॥

( पदकृ० ) ननु 'अनुमितेरेव दुर्निरूप्यत्वात् तद्घटितमनुमानमपि दुर्निरूपम्' इत्यत आह–**परामर्शेति** ॥ प्रत्यक्षादावतिव्याप्तिवारणाय 'परामर्शजन्यम्' इति । परामर्शध्वंसवारणाय 'ज्ञानम्' इति । परामर्शप्रत्यक्षवारणाय, 'हेत्वविषयकम्' इत्यपि बोध्यम् ॥

---

१ प्रत्यक्षे । २ अतस्तद्वारणाय 'ज्ञानः' ।

